।। ॐ नमो परमात्मने ।।

**।। दयाशतक प्रारम्भः ।।**

श्रेयांसि सन्दिशति कन्दळयत्यमन्द-
मानन्दमस्य दळयत्यघबृन्दमार्तीः।
धूनोति किङ्करयति द्रुहिणादिकांश्च
मातस्तवैष उदयोहि दये पुरारेः।। १

कल्याणि शैलतनयाकमनानुकम्पे
त्वं यत्र यत्र वितनोषि पदार्पणानि।
प्रागेव पद्मजवलोन्मथनादिलक्ष्म्यः
प्रादुर्भवन्त्यवहिताः खलु तत्र तत्र।। २

मन्दस्मितं मदनसुन्दरमिन्दुरेखा-
सन्नद्धशेखरमुमासखमुद्वहन्ती।
दिव्यं वपुः किमपि दृग्पथगानघानां
मातर्मुदं हि तनुषे महतीं दये त्वम्।। ३

दिव्यं वपुस्तदनुसन्दधतः पुरारेः
कांश्चित् गुणान् जगति केचन निर्विशन्ति।
आख्यामृतोर्मिरसिकास्त्वपरेऽभिनन्द-
न्त्यस्ताधयश्शिवदयेऽम्ब तवावलम्बात्।। ४

आखण्डलोऽयमिति कश्चिदखण्डितश्रीः
वित्तेश्वरोऽयमिति विश्रुतवैभवोऽन्यः।
धातेति कोऽपि जगतां जनकस्तवामी
कल्याण्युमेशकरुणे परिणामभेदाः।। ५

ईशो हरः स जगतां ननु तस्य च त्वं
ईशा परार्तिविनिराकृतिराकृतिस्ते।
तन्मामकार्तिहरणं करुणे न चेत्त्वं
धत्से कथं कथय देवि तवात्मलाभः। ६

दाक्षायणीसहचरे गरळग्रहेण
दत्ताभये विरचितेऽम्ब दये भवत्या।

अश्वद्विपात्तिरमरेशितुरच्युतस्य

श्रीकान्तता दिविषदाममृताशिता च।। ७

क्रूरेण हन्त गरळेन गळेऽनलेन

फाले शिरस्यपि तरङ्गवतीझरेण।

क्रान्तं त्वदध्वगतमातनुषे दये स्वा-

धीनेश्वरा भवसि कः किमिहाभिधत्ताम्।। ८

काचित् त्वदीयकणिका मणिकाञ्चनाद्यैः

अर्थैर्धिनोत्यमुमिहारुचिहेतुरन्या।

उल्लासयत्युडुपतिश्रितमौळिसीम्नि

त्वद्धाम्नि ते हि करुणे सरणिर्विचित्रा।। ९

भीषामहद्भयगिरोऽतिभयङ्करत्वं

यस्याहुरुग्र इति भीम इति प्रथा च।

क्षिप्त्वैव दासयसि देवि दये तमेनं

हा जिह्वयैतदभिधास्पृशि पुल्कसेऽपि।। १०

नान्यो मदस्त्यगतिकोऽगतिकस्तव स्वं

शम्भोर्दयेऽघपिशुना मयि शश्वदास्ते।

सर्वज्ञता विदधती तव दुर्लभं मां

सज्जस्व मा जननि भूरपदे तु निस्वा।। ११

स्वाधीनितेन्दुमकुटासि समर्थितोप-

मन्युप्रभृत्यभिमता जगति श्रुतासि।

आयुष्मती जननि मन्तुभिरेव चासि

हा हन्त मां न करुणे कथमभ्युपैषि।। १२

शम्भो त्वमेव शरणं मम चन्द्रचूडे-

त्याद्या गिरस्तदुचितस्थितिहानितो नः।

सत्येतरा अपि विभुर्भजनाय यद्यत्

गृह्णाति तद्धि करुणे चरितं भवत्याः।। १३

यदेशः कुप्येन्मे दुरितविसरैर्दैन्यधुरया

तदा मे हूताविर्भवतु भवती तस्य च पुरः।

मदीयांहस्संहत्यपलपन रंहः प्रथयति

त्वदाविर्भावेऽसावलमिह दये किं कलयितुम्।। १४

महेशो सङ्क्रुद्धे मदघविदि मह्यं श्रितजन-
श्रमाक्षन्त्री देवि त्वमयि सहसाविर्भव दये।
मदीयांहस्संहत्यपलपन रंहः प्रथयति
त्वदाविर्भावेऽसावलमिह दये किं कलयितुम्।। १५

त्वया भाव्यं मातर्मयि शशिकलोत्तंसकरुणे
प्रणम्य त्वां याचे कति कति भवत्या न हि भृताः।
जगत्येको वर्ते क्वचिदपि गतिं काञ्चिदपि न-
न्वपश्यन्नैवेदं सदृशमगतीनां तवगतेः।। १६

तवाद्ध्वन्या धन्यास्तव हि भवनादन्तकरिपोः
यदेष्वेकेनैनं शिरसि धनुषा घातमदयम्।
तथान्येन ग्राव्णाङ्घ्रिरणमपरेणासि लतया
दयेऽनैषीन्मूर्द्धंप्रविदळनप्यम्ब भवती।। १७

प्रियोऽर्थोऽयं शम्भोः प्रसदनविधेयाधिगम इ-
त्यथ द्वेष्योऽयं तत्प्रसदनविधेयक्षतिरिति।
परोऽयं तत्रायोदय इति च तद्धीकृदखिलं
न मे तद्धीमैवं मयि विमुखता ते शिवदये।। १८

क्षिपन् कामिन्यादिष्वनवधिमिथोवैशसधुरा-
दुरापेष्वेष्वक्षप्रकरमधिबालेयवदनम्।
मधुस्यन्दिद्राक्षाफलकुलमिवायुर्वितथयन्
कियत्कालं सीदान्ययि मयि कदा स्याश्शिवदये।। १९

कदा गौरीनेत्राञ्चलसमुदितानङ्ग चकितान्
कटाक्षांस्तांस्तञ्च स्मितमधरबिम्बे कृतपदम्।
मुखं शाम्भोस्तञ्चोन्मृदित शरदिन्दुप्रियसखं
पुरस्तादादध्याः पुरभिदनुकम्पे जननि मे।। २०

असावर्थः श्रेयानयमितर इत्यच्छमतिदाः
प्रजानां शर्माप्तावसुखविरहे च प्रतिभुवः।
विभान्ति श्वासा यद्विधुशकलमौळेर्भगवतः
तदेतत् कल्याण्यास्तव विलसितं किं न करुणे।। २१

स्मराराते शम्भो पुरहर शिवो माधव हरे
मुरारे गोविन्दामरवर मुकुन्देत्यविरतैः।

शिवाख्यापीयूषोर्मिभिरयि दये मां कबळितं
कदा वा कुर्वीरंस्तव गुणझरा मज्जितहराः।। २२
समुन्मीलज्ज्वाला ज्वलनकलितस्यान्तिकगतो
यथा तद्वद्दाराद्यभिरतिह तस्यान्तिकगतः।
असावीष्टे नोज्जीवितुमहह का तस्य तु कथा
किमन्यज्जीवातुस्त्वमसि जगतोऽस्येशकरुणे।। २३
मयीशानं वामाशयमतितरां मज्जयतु ते
कदा पूरः स्वैरं कबळिततटो देवि करुणे।
तथा द्रागुत्कर्षन् विघटितविघातव्यतिकरः
कदेशप्रेमाख्ये महति च पदे स्थापयतु माम्।। २४
प्रियो द्वेष्योऽप्यर्थस्तुदति मम बुद्धिं तदितरे
ऽप्यमी स्वैरं निघ्नन्त्यहह गिरिशालिङ्गनसुखे।
प्रसक्तिः का वा स्यात् भगवति नमस्तेऽर्हसि न मां
इयद्दूरीकर्तुं गिरिशकरुणेऽनन्य शरणम्।। २५
दये शम्भोस्तद्भक्त्यमृतलहरीं तावकझराः
कदेहोपानेष्यन्त्यलमपनयन्तः प्रतिहतीः।
तया चात्मा मेऽसावतिशिशिरितोहास्यति कदा
मनोजाद्युन्मीलद्गहनदहनोत्थं परिभवम्।। २६
महेशस्य प्रज्ञासमुचितविधानक्षमतया
ममाप्येनोराशेरपि समवमर्शे सति न मे।
समाश्वासस्याशा निजलहरिभिस्तन्ननु विभुं
वितन्वाना मग्नं विहरसि यदि त्वं न करुणे।। २७
दशायामेतस्यामपि शिवदये ते विमुखता
मयीत्थं चेन्मग्नो महति विपदब्धावहमसौ।
अकीर्त्यब्धौ मग्ना त्वमपि मम यत्किञ्चन भव-
त्वपि स्वोद्धारे वा भवतु भवती प्रोद्यमवती।। २८
कमलभवपदं वा कैटभारिश्रियं वा
मदनभिदनुकम्पे मङ्क्षु दातुं क्षमा त्वम्।
किमु न दिशसि वीतक्लेशिकामासिकां मे
क्वचन शिवशिवेत्याख्यानधारैकतानाम्।। २९

हितमहितमवैतुं वर्तितुञ्चानुरूपं
न पुनरलमबोधानीश ताभ्यां हतोऽहम्।
प्रमथपतिदयेऽये पालयेस्त्वं कथं मां
कथमिव न च ते स्यात् ख्यातिभङ्गो न जाने।। ३०
तव भवति निवासस्तारकाधीशमौळिः
स च मदघभवोग्रामर्षपर्याकुलात्मा।
समव तमनुकम्पे त्वद्रसौघावसेकैः
मम तदलमयि त्वं नावने मेऽर्थनीया।। ३१
अभिलपतु शिवाख्यामाहरेत्यातिदम्भात्
अपि सकृदयमेतस्याखिलार्तिं हरिष्ये।-
इति सततविनिद्रामिन्दुमौळेर्दये य-
द्यहमिव न जडः कोऽनन्यधीर्नाश्रयेत् त्वाम्।। ३२
चरति समनुरुन्धन् प्रेरणाधोरणीं ते-
ऽनिलगतिमिव तूलो ह्येष दोषं कुतोऽस्मिन्।
गणयसि परतन्त्रे मन्नियोगादवद्रा-
गमुमिति करुणे तं त्वादिशेशं मदर्थे।। ३३
मदघविततिरन्तः सत्वमाविश्य शम्भोः
प्रविघटयति योगं तस्य ते चानुकम्पे।
तदपि निरुपमा मद्दैन्यसम्पत्तिरेषा
प्रतिभवति पुनर्वां निर्भराश्लेषसन्धौ।। ३४
दळयतु दिगिभौघो दन्तकाण्डैः कठोरैः
दहतु दहनमाला दारयत्वस्त्रजालम्।
अपि धुरिपरिवृण्वन्त्वब्धयोनैनमार्तिः
स्पृशति शिवदये यः स्पृश्यते तेऽनिलेन।। ३५
अधिजटमसुरारात्यापगा क्वापि लीना
मनसिजविनिहन्तुर्मज्ञितोऽयं झरैस्ते।
कबळयति निमङ्क्तुस्साश्रमं त्वं त्वमङ्क्तुः
कथमिव न दये ते स्वर्धुनीतो विशेषः।। ३६
प्रभवति न हि दातुं भद्रमीशो विना त्वा-
मलमपि तददातुं नाम्ब सत्यां भवत्याम्।

वितरति च शुचं त्वद्विप्रकर्षे सतीशः
कथयितुमनुकम्पे कस्तवालं प्रभावम्।। ३७
मदनशतमनोज्ञं मञ्जुहासाननाब्जं
शरदुडुपतिगौरं साम्बमर्धेन्दुचूडम्।
द्रविणमयि मदीयं दृक्पथे यत्स्वमेतत्
तव खलु वशवर्तीत्यर्थयेऽहं दये त्वाम्।। ३८
त्वमसि मदवनार्थं नार्थनीया दयेय-
स्तव भवति निवासो दुस्सहं तस्य शम्भोः।
प्रशमय तममर्षोष्मातिरेकं ममागः
प्रभवमयि भवत्या निर्झरैस्तन्ममालम्।। ३९
पशुरिव परिभूतीरश्नुवानोऽपि शश्वत्
विषयविसरमेतं हातुमप्यप्रगल्भः।
विष इव विमुखस्ते वेश्मनीशे तथाहं
कथमिव करुणेऽङ्गीकारपात्रं तवाहम्।। ४०
अवितरि पुरहन्तर्यस्य सर्वस्य जन्तोः
मम गतिरबलाद्या नन्वमी सोऽहमेषाम्।
इति कुमतिहतस्तं चिन्तये हन्त नेशं
स तु कथमनुकम्पे स्यान्मयि त्वद्विधेयः।। ४१
विसृमरदहनार्चिर्विप्लुतोऽह्नाय शीतं
जलमिव करुणे सन्त्यक्तसर्वः कदाहम्।
तव पदमुडुराडुत्तंसमानन्दसिन्धुं
श्रमहरमवगाहे दत्तहस्तो भवत्या।। ४२
मकुटगविधुनि त्वन्मन्दिरे स्थित्यलाभः
स्थितिरियमितरव्यासङ्गदावानले च।
फलमहह दयेऽदः कस्य पापस्य वा द्राक्
तदिदमुदसनीयं दौःस्थ्यमम्ब त्वया मे।। ४३
तनुकरणकदम्बं दक्षमेवं मनस्त्वत्
ग्रहचणमनुकम्पे नन्वदाश्शङ्कराख्ये।
प्रदिशसि मम किं न त्वन्निवेशे प्रवेशं
प्रददति भुवने किं प्राणशून्याय कन्याम्।। ४४

सगरळमधिकण्ठं सानलं फालदेशे
सदनमहिपरीतं सर्वतस्तेऽनुकम्पे।
तदिदमुपगता ये तानिमांस्तन्वती त्वं
विहरसि जितमृत्यून् वीक्षितानप्यमीभिः।। ४५
न वितर पदमैन्द्रं न श्रियं वैधसीं वा
श्रितभुजगकुलेऽपि क्ष्वेवळखेलद्गळेऽपि।
मम घटय दये त्वन्मन्दिरे सम्प्रवेशं
विगलितविविधव्यासङ्गमेतन्ममालम्।। ४६
तव समुदयरोधं तत्परोऽसौ विधत्ते
स्वकचरितमहिम्ना स्वात्मघाती तमेनम्।
भगवति ननु भर्तुं भ्राम्यसीशानुकम्पे
तव परहितनिष्ठा तादृशी स्तौतु कस्त्वाम्।। ४७
कियदिव विमुखत्वं चित्सुखात्मन्युमेशे
रतिरपि कियती मेऽन्यत्र धिङ्मां ममास्य।
असदपि न दये त्वं हास्यसि त्राणमद्धा
तव क इह निरोद्धा दासयन्त्यास्तमीशम्।। ४८

अश्रूद्गमगद्गदवागविरळपुळकाढ्याभवे भक्त्या।
कति न रमन्ते मां शिवकरुणे कुरु तदनुगं ममैतदलम्।। ४९

करुणे तरुणेन्दुधरस्त्वद्वशवर्तीति तव निशम्य यशः।
तस्यावलम्बमीहे तद्घटने प्रतिभुवात्वया भाव्यम्।। ५०

जनिमृतिदहनार्चिश्शान्तिदिव्यामृतौघे
जननि शशिविभूषे त्वद्गृहे सम्प्रवेशम्।
विघटयदनुकम्पे विघ्नबृन्दं विभिन्दन्
मयि पततु कदा त्वन्निर्झरः श्रान्तिहारी।। ५१

त्वमभिज्ञशिखामणौ महेशे भजदत्यङ्कुशमन्तुसन्ततीनाम्।
यदपह्नुतिपण्डिता दये तन्निरवद्यं तव वेद्मि साहसिक्यम्।। ५२

करुणे कथये किमाज्ञया ते ह्यनुधावत्यहह स्मरन्ति ये तान्।
मकुटव्यतिषङ्गिचक्ररेखं मदनध्वंसि मदीयभागधेयम्।। ५३

हरिणार्भकमानने तरक्षो-
रिव कान्तादिमुखे भयानके माम्।
विनिपात्य शिवो विलोकमानः
करुणे किन्न कदर्थ्यतेभवत्या।। ५४
करुणे तरुणेन्दुधारिणो म-
द्धरणे शंस तवाम्ब को विळम्बः।
गणितोऽयमहं किलाखिलाङ्गि-
ष्वयि किं तेषुन मामलेखयस्त्वम्।। ५५
अघवानिति मय्यसङ्गृहीते
सकलाघापहजातुनामवादः।
अपि दीनजनावितेति कीर्त्यो-
रवसादं करुणेऽभिधेहि शम्भोः।। ५६
मम शम्भुदये त्वदर्हताया-
महमन्यन्न विलोकयाम्युपायम्।
मम चोदितयार्तिभिस्त्वयैव
श्रयणीया तदुपायता ब्रुवे किम्।। ५७
पुरभिद्करुणे पुरन्दराद्यैः
त्वमुपास्या सुलभा न नस्तथापि।
प्रचकास्ति परातिदुर्लभ त्व-
त्पददर्शी ननु दीनताश्रयो नः।। ५८
भवतीशदये पयोदमाला भवतीव्रानलशान्तिदाश्रितेषु।
तमसामवसादिकाश्शिवेक्षाततटितश्चित्रमचञ्चलाः प्रसूते।। ५९
करुणे शिवचन्द्रचन्द्रिकासौ
भवती सन्मणिसौधसंसदीव।
प्रसृतापि मयीह तुच्छकुड्ये
तिमिरं लुम्पतु तावता क्षतिः का।। ६०
कुतुकपरवशैरुमाकटाक्षैः
कुवलयभाजि नवोडुपावतंसे।
जननि तव झरे निमग्नमस्त-
ज्वरभरमारचयेर्दये कदा माम्।। ६१

बत सहविहरद्दरस्मितानां परिचरणाधिकृतारविन्दभासाम्।
भगवति करुणे त्वयेरितानां पथि मसान्यहमीश वीक्षितानाम्।। ६२

सर्वज्ञत्वादिगुणाः स्वात्मत्राणैकलम्पटा बहवः।
शर्वस्य शङ्कराख्या निर्वहणं तद्दये त्वदायत्तम्।। ६३

श्रीकण्ठाय क्ष्वेळं रोचितवत्या दये ननु भवत्या।
मामकमन्तुकदम्बे केवलमम्बेह वद विलम्बः कः।। ६४

शिव इति तद्भक्तिरिति स्मृतिरस्य च सेति सार्तिहन्त्रीति।
इयदवगमय्यशेषे विरतिरियं शिवदये न ते सदृशी।। ६५

अब्जजयितुमच्युतयितुमपि शिवयितुमलमुमेशकरुणे त्वम्।
अलमसि शिवरसिकानामक्षिपथे किन्न मां प्रवर्तयितुम्।। ६६

विजयस्व सिद्ध्यतात्तव विधुशेखरविप्रलम्भनैपुण्यं।
मन्मन्तुभिरुन्मिषतु च मातः करुणेपिचण्डिलत्वं ते।। ६७

करुणे यदि मन्मन्तून् कबळयसि न विप्रलब्धगिरिशा त्वम्।
का मम गतिस्तवापि च का गतिरागोभिरेव जीवन्त्याः।। ६८

करुणे त्वदध्वगानां कामाद्या ये द्विषस्तदुन्मथने।
गिरिशं त्वयेरयन्त्या कृतोऽस्य भीमोग्रनामसंसर्गः।। ६९

शर्वं प्रति मन्मन्तुषु सर्वज्ञतया निवेद्यमानेषु।
आधूयताममुं दृढमालिङ्ग्य दये नयाशु परवशताम्।। ७०

अहह गिरिशैकतानामभिलषितस्थितिमनाप्तवति मयि ताम्।
आर्तिषु मज्जति वर्तितुमर्हसि न स्तब्धमेवमीशदये।। ७१

नागांसि यन्महान्त्यपि गण्यन्ते गुणकणो बहुक्रियते।
गिरिशेन तदनुगैरपि तत् गिरिशे त्वन्निवेशतः करुणे।। ७२

मतिवागपदेऽनन्ते महेश्वरे मनन नमन पूजाभिः।
आगोभिरभाविगुणैरनुकम्पे तस्य तव परिष्वङ्गात्।। ७३

अवरुन्धत्या करुणे हरं त्वया तस्य मामकस्वान्तम्।
गेहं क्रियतामयि मे साहङ्क्रियताज्वरं जिहीर्षसि चेत्।। ७४

कामारिणा निविष्टैः
कामादिभिरशरणस्त्वहं करुणे।
ताड्ये किल किन्न त्वं
तत् ज्ञपयसि तच्च किन्न वारयसि।। ७५

अन्तकहरं पदं तव हन्त दये घ्रातुमप्यनर्हं माम्।
अकरोद्दुर्विधिरस्तु तदपनयने तव विलम्बनं नार्हम्।। ७६

दृष्टे मया त्वदोकसि दृशानया सर्वमङ्गळाश्लिष्टे।
करुणे का तव हानिः कति कति तद्दर्शिनस्त्वया न कृताः।। ७७

दुग्धार्थिनो मुनिशिशोर्दुग्धांबुनिधिर्वशं नीतः।
जलधिरपरस्य हस्ते जलकणतां शिवदयेनतेऽस्ति भरः।। ७८

अवतंसितेन्दुकन्दळमाज्ञावशवर्तिपवनतपनादिम्।
कलये दये तव झरं कर्म परब्रह्मगन्धिनिश्वासम्।। ७९

करुणेऽङ्गीकुर्या मां कदाम्ब तमुमासखं चिदाकारम्।
गलहस्तितविषयान्तरमासीनं मन्मतौ कदा कुर्याः।। ८०

भयविरहमन्तकात्त्वं प्रदिश परस्येव न मम किन्तु भयम्।
येन शिवेऽभिरतस्स्यां शिवानुकम्पे प्रसीद तदलं मे।। ८१

गौरीसखमुडुगौरं कन्दर्पसहस्त्रसुन्दराकारम्।
नीलग्रीवमुदारं निधेहि मन्मनसि तव दयेपूरम्।। ८२

क्रन्देयं बत कं प्रतीह बलिना कामेन कामान्तकः
कामं पश्यति पीड्यमानमपि मां कालेन कालान्तकः।
त्वञ्चेत्तस्य विभोर्भवत्कृत परिष्वङ्गैरपाङ्गैर्दये
मामामोदयसे क्षतिस्तव तु का किंस्याच्च मेऽसौदशा।। ८३

निद्रालस्यभरोवपुष्यतिजरादुस्सङ्ग ईर्ष्यामतिः
यत्र क्वापि हि कैश्चिदित्थमशुभैर्विघ्नैः परीतस्य मे।
ईशानेऽभिरतिश्च निर्वृतिकथा क्वेशानुकम्पे कदा
दीनान्वेषिणि. मां त्वदभ्युपगमो दीनाग्रगण्यं स्पृशेत्।। ८४

तरणे भवस्य शरणैषिणा मया दुरितानि हन्त चरितान्यलं दये।
उचितानि नैव रुचितानि मानसे लपितानिचैव कुपिताकृतीनिमे।। ८५

शमनावलेपदमनावहाम्ब कि-
न्वपुषत् न खिन्नवपुषं मृकण्डुजम्।
भयती मदीय भवतीव्रतापहृत्
तरुणेन्दुचूड करुणे नकिंभवेत्।। ८६

उचितं तवोपरचितं दये न किं
प्रबलापराधकबळार्पणं मया।
अयि शर्वमम्ब मयि शर्मदं न किं
वितनोषि शंस बत नो यशोऽस्त्यतः।। ८७

गरळे हरस्य तरळेतरां रुचिं
भवती दयेऽर्पितवती न मेऽम्हसि।
उदितादरात्र विदिता कराळता
महिता न सा किमहितावहा तव।। ८८

कलिनामुनातिबलिना कदर्थितः स्व-
हिते क्षमो न विहितेऽस्मि मादृशाम्।
अवने श्रमस्तु तव नेशितुर्दये
जगति त्वयैव स गतिस्तदस्म्यहम्।। ८९

वलभेदनादिसुलभेतरं हरं
स्मरतो दळाम्बुकिरतोऽपि निर्वसोः।
नयसे वशं कलयसेऽद्भुतं दये-
ऽहमसावपीह किमसानि तेपदम्।। ९०
स्मरणं प्रणामकरणं तथाभिधा-
गदनञ्च जातु चिदनङ्गवैरिणः।
परमं भवार्तिहरमम्ब देहिनां
त्वदये गतिस्तव दये गरीयसी।। ९१
भवतापभीतमवताखिलं जनं
पुरमर्दनेन परमर्ज्यते यशः।
घनमम्ब यत् भुवनमङ्गळं दये
तदये श्रमच्छिदुदये त्वदाश्रयात्।। ९२
भुवने तवाम्ब नवनेपटुर्दये
परमत्र को नु झरमञ्जितस्स ते।
श्रितमन्तुशैलशतमन्तकान्तको-
ऽखिलवेदिता न किल वेदितुंक्षमः।। ९३
मनसेह सर्वमनसेव यद्वहे
हरमेकमेव न रमे हि विस्मरन्।
तदिदं त्वमेव हृदि मन्तुमाशु मे
करुणे यतस्व तरुणेन्दुशेखरम्।। ९४
किमतो ममाम्ब विमतो भवार्णव-
स्तुदतीहमां न नुदतीदृशं शुचम्।
गिरिजापतेरुपरि जातु मे दये
हृदयं कुरुष्व सदयञ्च तञ्च माम्।। ९५
चरणं नतार्तिहरणं विभोर्दये
नृतमो भजेत कतमो विना त्वया।
तदमुं तवाम्ब पदमुन्नतन्नय
प्रभवे मदर्थिविभवेऽर्थिनी भव।। ९६
कमलासनश्च कमलापतिश्च ते
कलयाप्नुतां हि तुलया विहीनताम्।

स्वकरावलम्ब सुकरामृतश्रियं
कुरु मे कुलेशितुरुमेशितुर्दये।। ९७
अपराधजालमपरा नुदेतका
भवतीं विनोद्धृतवतीं जगद्दये।
जननीं प्रमोदजननीमृते शिशोः
शमलं प्रमार्जितुमलं परा तु का।। ९८
उमापतिरमापती मम शिवौ जहीतां मनो
न जातु करुणे यथा कुरु तथैव बुद्धिं दृढाम्।
तथैव रसनाममूं शिवशिवेति वागुद्धरां
न चैतदुभयं विना किमपि मेऽभिलाषास्पदम्।। ९९
प्रसीद करुणेऽधुना मनसि मे शिवं स्थापया-
नपायिनमुमासखं कुरु च मय्यनुग्राहकम्।
तथानिशमिहासनं शिवपदस्य जिह्वाञ्चले
ददस्व मम काङ्क्षितद्वयमिदं त्वदेकायनं।। १००
कालेऽन्तिमे शिवदये मम ते
प्रसादादेतावदेव हृदये दृढमाविरस्तु।
यद्व्यक्षरं शिवशिवेति तवास्पदीयं
मोक्षप्रदं भुवनमङ्गळ नामधेयम्।। १०१
एवं दयास्तवमिमं पठतां हि भक्त्या-
रोग्यायुरच्छशिवभक्तिधनर्द्धि विद्याः।
अग्र्यान् सुतानपि यशश्च विमुक्तिमन्ते
श्रीपार्वतीशकरुणा दिशति प्रहृष्टा।। १०२

।। इति श्री श्रीधरवेङ्कटेशार्य कृतौ दयाशतकं समाप्तम् ।।